रूप, एकोनैक सव क किं" इत्यादिश्रुतिस्मृत्यनुरोधेनब्रह्मधर्मतयाब्रह्मत्वमयव्यंस्वी-कार्यमितितावताशुद्धाद्वैतस्याबाधात्। तत्तद्दर्शवैलक्षण्यस्याभिव्यक्तिस्तु जतुधृतगतद्रव-त्वस्यतेज सयोगेनेवतदिच्छाविशेषरूपनिमित्तेनेवेतिविस्तरात्पुरानिरणायि॥ तेनसृष्टीच्छा-यावत्तत्कार्याविर्भावायतत्तदंशान्पृथक्करोतीतिद्वितीयस्कन्धसुबोधिन्यास्फुट॥ अतस्तत्रतत्र-तत्तत्तिरोभावातिरोभाववैलक्षण्यंनिरवद्य॥ वन्हौसर्वत्रैवावस्थितास्वपिदाहप्रकाशादिश क्तिपुदाहकत्वमात्रस्यमणिसमवधानेन तिरोधानेपियथावदितरधर्माणामतिरोभाव। यथावा राघोभूतसूक्ष्मरूपद्वतिपौराणमतेनगुणसमुदायोद्रव्यमितिमहाभाष्यादिमतेनच पृथिव्यभि-न्नस्यापिगन्धस्यपाषाणादिरूपायापृथिव्यातिरोभावेऽपिनतत्रपार्थिवगुणातरस्यतिरस्कारस्तथा-त्रेतिदिक्। यच्च (जीवजडयोर्ब्रह्मणात्यताभेदेने) त्यादि—न्नद्य, 'सदेवसोम्ये त्यादिश्रुतिभि पूर्वमत्यताभेदेपिसर्वशक्तिरीश्वरोन्युच्चारणेनजडादीन्स्वत पृथक्कृत्य तत्रतत्रततमशतिरो भावयतीतिनेश्वरेतरत्सवद्य। महाग्निचयात्काचिदग्न्यशानपृथक्कृत्यमणिसन्निधापनेनतेपुदा हृद्यकौतिरोभावितायामपीतिनमहाग्निनिष्ठासातिरोधत्ते॥ अशमात्रधर्माणामशिन्यसव-धश्चसूत्रकृता (अ० २ पा० ३ सू० ४६) "प्रकाशादिवन्नैवपर" इत्यादिनासमर्थित। अतएवचक्षुरादिंद्रियाणासूर्यांशत्वेबहुश्रुतिस्मृत्यादिमानसिद्धेऽपितेपुकुत्रचिच्छापरोगादिना—दर्शनयोग्यतातिरोधानेपिनभानोसातिरोधत्ते॥ अयमेवार्थ कठवल्ल्यादिषु "सूर्योयथा सर्वलोकस्यचक्षु" इत्यादिनात्दृष्टातपुर सरजीवगतनिरानदत्वादेरशिन्यसबधआम्नायते॥ स्मृतिपुच—'तत्रय परमात्माहिसनित्योनिर्गुण स्मृत। नलिप्यतेफलैश्चापिपद्मपत्रमिवा भसा। कर्मात्मात्वपरोयोसौमोक्षवधै सयुज्यते। ससप्तदशकेनापिराशिनायुज्यतेपुन।' एवमादिपुअपरभावोत्तरमशासाधारणधर्माणामशिन्यप्रसक्ति स्मर्यते। एवमथपरा श्रुति-स्मृत्वयश्च सूत्रकृता (अ० २ पा० ३ सू० ४७) "स्मरन्तिच" तिसूत्रेविषयीकृता॥ तस्मादशादिभावमनाहत्य विभुजीवमन्यमानस्यतवमते तस्यब्रह्मणात्यताभेदात्तत्रोपाधि-सवधेपरसिद्धुपाधेरौपाधिकधर्माणाचसबधोवुर्निवार स्यात्। नतुन्युच्चरणमशत्वचमन्य-मानस्यममते तत्प्रसगइत्यल॥ जीवस्यानदतिरोभावादेवभेदइतितुवदाम। न्युच्चरणे त्तस्मैव तत्रतत्रतत्तदशातिरोभावागीकारात्। स्पष्टचेदमस्माक निबधादिपु (प्र० १ श्लो० ३१–३२) 'तदिच्छामात्रतस्तस्माद्ब्रह्मभूताशचेतना। सृष्ट्यादौनिर्गता सर्वेनिराकारास्त दिच्छया॥ विस्फुलिंगाइवाग्नेस्तुसदंशेनजडाअपी'त्यादिस्थले॥ जडादौन्यूनाधिकाशतिरो धानेन्युच्चरणसाम्यमात्रतुनप्रतिबधक युगपदन्युच्चरितवत्स्वापिविस्फुलिंगेपुकेपाचिज्जलादि योगात्तत्क्षणमेव निर्वाणताया केषाचिरक्षणमनस्थानस्य केपाचित्तृणकार्पासादियोगेनाधि-क्यस्यच दर्शनेनकार्याग्निमव्यवस्थायान्युच्चरणसाम्यस्याप्रयोजकत्वाव्यवसायात्॥ तिरो भावेहेतुस्त्वीश्वरेच्छैव। "इततिरोसानि। पराभिध्यानात्तुतिरोहित" मित्यादिश्रुति सूत्रैस्तथैवसिद्धे॥ यच्चश्रुतिसूत्राण्युद्धृत्यतात्वर्यातात्प्रतिवक्ष्यते तन्मया निराकरिष्यते॥ उक्तरीत्यालौकिकालौकिकमानसिद्धतिरोभावस्यहेत्वतरेणानिष्पादात् तद्धेतु सैववा या॥ नचपराभिध्यानसूत्रीयस्वभाष्यानुरोधेनाविद्यायातिरोधायकत्वमवत्य, वास्तवयाब्रह्मा-त्मकज्ञानानदयोर्मिथ्याभूतयातयातिरोधानायोगात् तयात्वेपरस्यानीश्वरत्वपराभाव्य-

स्यादिप्रसंगाच्च ॥ किंच यानिष्कारणंस्वसामर्थ्येन नित्यज्ञानादिकंतिरोभाव्यब्रह्मणाजीवत्व-मापादयेत् सातज्ज्ञानमात्रेणैनकथंनश्येत् ? । निखिलमृगोपमर्दीमृगेंद्रोनहिमृगज्ञानमात्रे-णाभिभवितुंशक्यः । तथाचसति अनिर्मोक्षप्रसंगः "तमेवविदित्वातिमृत्युमेति । तमेवं-विद्वानमृतइहभवती" त्यादिश्रुतिविरोधश्च ॥ किंचोपधित्यागेचैतन्यात्यंताभेदस्वत्वदभि-मतत्वात्त्वदुक्तदोषास्त्वन्मतएवप्रसरंति ॥ तत्रापिजीवविभुत्वनिर्वाहायकृत्स्नस्यब्रह्मणोनि-त्यज्ञानादितिरोभावितमितिवक्तव्यं. तथाचसविशुद्धब्रह्माभावप्रसक्तिः । ब्रह्मैकदेशतया-तस्यतिरोधानांगीकारेतुब्रह्मण.सांशत्वापत्तिर्जीवमध्यमपरिमाणत्वादापत्तिश्च ॥ ( यचतर्क-स्तुत्वयाश्रौतेऽर्थेनाश्रीयत ) इति वदज्ञानात् ( अ० १२ श्लोक १०५-१०६ ) "प्रत्यक्षं-चानुमानंचशास्त्रंचविविधागमं ॥ त्रयंसुविदितंकार्यंधर्मंशुद्धिमभीप्सता ॥ आर्षंधर्मोपदेशं-चवेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्तेसधर्मंवेदनेतर" इत्यादिवचनानुसारेणश्रौतेर्थे-श्रुत्यनुकूलतर्कस्यास्माभिरादियमाणत्वात् ॥ श्रुतौअंशांशिभावानादरोक्तिस्तुदाहृतचर-मैन्युपनिषदाद्यदर्शनात् ॥ किंचविस्फुलिंगश्रुतावप्यग्निविस्फुलिंगदृष्टांतेनदार्ष्टांतिकेंशां-शिभाव.समर्थ्यते । अतएवांशोनानेत्यादिसूत्रव्याख्यानेतत्रद्वाक्येपिमएवश्रौतदृष्टांतउपन्य-स्यते । यद्येतद्दृष्टांतेनअंशांशिभावोनसिध्येत्तर्हितादृशस्थलेभाष्येतदुपन्यासोसंगतःस्यात् ॥ अथ ( ब्रह्ममात्रतएवव्युचरण ) मिनीतरव्यवच्छेदकमात्रपदंतुप्रियंनः । पडनादित्वसिद्धां-तस्यसदेवेत्यादिश्रुतिदातव्याधितत्वेनकेवलब्रह्मणः सकाशादेवव्युच्चरणस्वीकारात् ॥ येस्तु-ब्रह्मणोऽनिर्विशेषत्वयाकर्तृत्वादिविशेषसमर्पकोपाधिसंबंधेन तस्यव्युच्चरणावधित्वमुच्येत तेषामियंयुक्ति.स्वपादेकुठारप्रहारः ॥ तिरोभावेऽप्यस्तित्वादिप्रत्ययस्तुसमर्थितः । तत्र ब्रह्मधर्माणां तिरोभावोनामऔकिकानुभवायोग्यत्वमेव, नतुतत्तत्कार्यावच्छेदेनसस्वब्रह्म-धर्मोनश्यतितत्तोपसर्पतिना । अतोब्रह्मण.सर्वत्र सर्वदैकविधत्वान्नैकरसत्वव्याघातः ॥ त्वदभिमतवस्तुस्थितिश्चदूषितैव ॥ पुनेनकिंचजीवजडयोरित्यादि स्थितिस्तूक्तेयंत-परि-हृतंवेदितव्यं ॥ एतावतायंनिष्कर्षसिद्धः ॥ सच्चिन्मात्रश्चित्प्रधानोब्रह्मस्वांशोहृदिस्थितः । विसर्पिचैतन्यगुणोऽणुर्जीवः श्रुतित स्मृतेः ॥ ॥ इति सप्तमश्लोकखंडनम् ॥

यत्तु ( जीवस्यपरसंमतमंशत्वंनिराकृत्यस्वसंमतंपंथानंनिष्कंट-कंचिकीर्षुः "यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नावहुधैकोऽनु-गच्छन् । उपाधिनाक्रियतेभेदरूपोदेवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ रूपं-रूपंप्रतिरूपोवभूवएकधावहुधाचैवदृश्यतेजलचंद्रव" दित्यादिश्रुति-संमतं "आभासएवच अतएवचोपमासूर्यकादिव" दित्यादिसूत्र-संमतंचजीवस्यब्रह्मप्रतिबिंबत्वमाहे ) त्यादिनास्वमतव्यवस्थापनंकृतं तदपिनकिंचित् मायायाभवद्भिस्तमस्तुल्यत्वांगीकारेणतमसिप्रति-बिंवादर्शनेनमायायां प्रतिबिंवांगीकारेमायाचेयंतमोरूपातापनीयेत-दीरणादितिकथनंविरुध्येत । नचमायायास्तमोरूपत्वमावरकत्वरूप-साधर्म्येणतत्वमायायामस्त्येवंस्वच्छत्वस्याधिकस्यस्वीकारेपिनतावता-

साहश्यहानिरन्यथामुखेपिचंद्रतुल्यत्वंनस्यात् । तत्रापिपार्थिवत्वस्य-
चंद्रावृत्तिधर्मस्यसत्वादितिवाच्यं; मायायाःस्वच्छत्वेब्रह्मावरकत्वा-
नुपपत्तेः । नहिदर्पणादिस्वच्छद्रव्यंकस्याप्यावरकंभवति । नचरज-
तादिपात्रस्यावरकस्यापिप्रतिबिंबग्राहित्वं दृष्टमितिवाच्यं; रजता-
दिकंयस्यावरकंतस्यैवप्रतिबिंबंगृह्णातीत्यत्रमानाभावादन्यथातन्मध्य-
स्थितस्यापिप्रत्यक्षत्वापत्तिः किंचप्रतिबिंबग्राहकत्वेसावयवपदार्थएव-
दृष्टंतथाचमायायांसावयवत्वाभावेनतत्रप्रतिबिंबग्राहकत्वंनसंभव-
तिप्रतिबिंबग्राहकत्वस्यसावयवत्वव्याप्यत्वेनव्यापकाभावस्यव्याप्या-
भावव्याप्यत्वात्तेनतस्यानुमितिसंभवात् । एवंरूपाभावेनापिप्रति-
बिंबाभावानुमानंबोध्यं । एवंरूपिद्रव्यस्यसावयवस्यपरिच्छिन्नस्यैव-
प्रतिबिंबदर्शनेनात्मनोनीरूपस्यनिरवयवस्यापरिच्छिन्नस्यप्रतिबिंबंन-
संभवतीत्यपिबोध्यं । यत्तुमायायाःसत्त्वरजस्तमोरूपगुणत्रयात्मकत-
या'सत्वात्संजायतेज्ञान'मितिभगवद्वाक्यात्सत्वस्यस्वच्छत्वेनमाया-
याःस्वच्छत्वमित्युक्तंतत्तुच्छं; तादृशवाक्यात्सत्वस्यज्ञानजनकतया-
ऽप्रकाशस्यप्रकाशेउपादानत्वासंभवेनप्रकाशत्वस्वीकारेपिज्ञानादि-
प्रकाशस्यप्रतिबिंबग्राहकत्वादर्शनेनप्रतिबिंबाधारत्वोपयोगिस्वच्छ-
तायाःकल्पयितुमशक्यत्वात् सजलकज्जललिप्तपात्रेदीपप्रतिबिंबंजल-
एवेतिनतस्यदृष्टांतत्वसंभवःआकाशेप्रतिबिंबाभावेनतत्रप्रतिबिंबरूप-
फलेनस्वच्छत्वानुमानेस्वरूपासिद्धिःस्यात् । नचशब्दप्रतिबिंबंप्रति-
ध्वनिरूपंआकाशेदृश्यतएवेतिकथंस्वरूपासिद्धिरितिवाच्यं; भवन्मते-
प्रतिध्वनेराकाशगुणत्वेनांगीकृतस्यशब्दप्रतिबिंबरूपत्वस्वीकारेऽप-
सिद्धांतापत्तेः 'प्रतिध्वनिर्वियच्छब्दोवायौबीसीतिशब्दन'मितिविद्या-
रण्योक्तिविरोधश्च ॥ नचैवमपिमायायास्त्रिगुणात्मकत्वेनसावयवत्व-
स्वीकारेणसावयवत्वाभावेनप्रतिबिंबग्राहकत्वाभावसाधनेस्वरूपासि-
द्धिरितिवाच्यं; मायायाःसावयवत्वस्वीकारेसावयवत्वस्यावयवसमवे-
तत्वरूपस्यावयवजन्यत्वरूपस्यैववक्तव्यतयातस्यचजन्यत्वव्याप्यत्वे-
नमायायाऽपिजन्यत्वापत्तिः तथाचानादित्वाभावेनापसिद्धांतः-
स्यात् ॥ संसारस्यापिसादित्वंस्यादितिवृद्धिमिच्छतोमूलमपिनष्ट-
मितिमहत्कौतुकंगगनेप्रतिबिंबाभावस्यपूर्वमेवसाधितत्वेनतमादाय-
व्यभिचारप्रदर्शनंतेनैवनिरस्तं । अतएवसावयवत्वपरिच्छिन्नत्वयो-
र्गगनेस्वीकारोपिनव्यभिचारः; मायायाः सावयवत्वेपरिच्छिन्नत्वे-
चतयोर्जन्यत्वाऽविनाभूतयोर्जन्यत्वानुमापकतयाऽनादित्वहानिरि-

तिस्वरूपासिद्धिंप्रदर्शयतोऽपसिद्धांतः। नन्वित्यादिनाप्रदर्शितेशंका-
समाधानेत्त्वसदसंमतेस्वकपोलकल्पितेचेत्युपेक्षिते ॥ स्वच्छत्वस्य-
प्रतिबिंबग्राहकत्वप्रयोजकत्वेप्रभादिगतस्वच्छत्वात्पृथिवीजलगतस्या-
न्यूनानतिप्रसक्तस्यतस्यदुर्वचनतयाप्रभायामपिप्रतिबिंबापत्तिरात्म-
नोपिज्ञानस्वरूपत्वादज्ञानस्य पूर्वस्वच्छत्वेनत्वयैवस्वीकृततयातस्मि-
न्नपिप्रतिबिंबंस्यादिति ॥ किंचकिंतत्स्वच्छत्वंयत्प्रतिबिंबग्राहकत्वे-
हेतुतयास्वीक्रियतेकिंजातिविशेषोवा, उपाधिर्वा? नाद्यः; संकर-
प्रसंगात्॥ सचव्रजातिविशिष्टत्वंजातिविशिष्टत्त्वंच समानाधिकरण-
त्वस्वाभावसामानाधिकरण्यस्ववृत्तित्वैतत्त्रितयसंबंधेन स्ववृत्तित्वं-
स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबंधेनबोध्यं।तथाच-
स्वच्छत्वस्यपृथिवीत्वसामानाधिकरण्यंदर्पणाद्यवच्छेदेन पृथिवीत्वा-
भावसामानाधिकरण्यंचजलाद्यवच्छेदेनपृथिवीत्वाधिकरणघटादि-
निष्ठाभेदप्रतियोगितावच्छेदकत्वाच्चत्रितयसंबंधेनस्वच्छत्वेपृथिवी-
त्वस्यविद्यमानत्वात् ॥ अत्रद्रव्यत्वस्यापिस्वसामानाधिकरण्यस्वा-
भावसामानाधिकरण्योभयसंबंधेन पृथिवीत्वादिजातिविशिष्टत्वा-
त्तत्रापिजातित्वंनस्यादतःस्ववृत्तित्वनिवेशः ॥ पृथिवीत्वादीनामपि-
द्रव्यत्वसामानाधिकरण्य स्ववृत्तित्वोभयसंबंधेनद्रव्यत्वविशिष्टत्वा-
त्तद्वारणायस्वाभावसामानाधिकरण्यनिवेशः जलत्वस्यापिपृथ्वीत्वा-
भाववद्वृत्तित्वतद्वन्निष्ठभेदप्रतियोगितावच्छेदकत्वसंबंधावच्छिन्न-
स्ववृत्तित्वोभयसंबंधेनपृथिवीत्वविशिष्टत्वात्तद्वारणायस्वसामाना-
धिकरण्यनिवेशः।तथाचस्वच्छत्वंनजातिः, नाप्युपाधिः; तस्यप्रति-
बिंबग्राहकत्वरूपत्वेचआत्माश्रयप्रसंगात्। नचप्रकाशकत्वंतदिति-
वाच्यं; जलादौप्रतिबिंबाभावप्रसंगात् तस्मात्स्वच्छत्वस्यनिर्वक्तुम-
शक्यत्वान्नतेनरूपेणप्रतिबिंबहेतुत्वसंभवः । नापि"आभासएवच
अतएवचोपमासूर्यकादिव" दितिसूत्रानुसारेणमायायांप्रतिबिंबोजी-
वइतिसंभवतितत्तत्स्तादृशार्थाप्रतीतेः ॥ तथाहि ननुसच्चिदानंदस्य
ब्रह्मणःसच्चिदानंदरूपांशसंभवतीतिकथंतस्यब्रह्मत्वप्रवेशआनंदांश-
तिरोभावश्चेत्यतआह-आभासएवचेतिआभासएवजीवःव्यापकत्व-
निरतिशयानंदादिरूपभगवद्धर्माभावात् यथाऽनाचारिब्राह्मणोब्रा-
ह्मणाभासःसूत्रधारकत्वेऽपिब्राह्मण्याख्यदेवतायास्तत्रतिरोभावात्॥
ननु "एकएवहिभूतात्माभूतेभूतेव्यवस्थितः। एकधाबहुधाचैवदृश्य-
तेजलचंद्रवदि" तिश्रुत्यनुसारेणप्रतिबिंबमेवजीवइतिचेन्न; तादृश्य-

श्रुतेर्यथा चंद्रस्यांशुद्राप जलप्रवेशेन नानात्वं तथा ब्रह्मणोप्यंशद्वारा तत्त-देहद्वयप्रवेशेन नानात्वमित्यर्थं कृत्वेन प्रतिबिंबमायासाधकत्वात् ॥ तत्र मुक्तियोग्यत्वाय ब्रह्मरूपतोच्यते; अहंग्रहोपासनायाः प्रकृतत्वात् ॥ बुद्ध्युपाधिको जीवभाव इतितु सर्वथैव न संभवति; मुक्तानामपि बुद्धि-संयोगसत्वेन जीवभावापत्तेः । न च मुक्त्यवस्थायां बुद्धेर्नष्टत्वात्कथं त-त्संयोग इति वाच्यं; ब्रह्मणो बुद्धौ प्रतिबिंब एव जीवभावः, स च एकबुद्धि-नाशेपि द्वितीयबुद्धौ पुनरपि स्यादेव । न च स द्वितीय एवेति वाच्यं; प्रत्य-क्ष एकत्वे प्रतिबिंबस्य बिंबरूपत्वेन द्वितीयत्वायोगात् ॥ प्रतिबिंबस्यो-पाधिपक्षपातित्वेनोपाधिभेदेन भेदांगीकारेतु पुनरावृत्तावपावेर्नाशेन मोक्षा-पत्तिः । न च नत्रोपाधेर्लय एव न विनाश इति वाच्यं; कार्यस्य कारणाव-स्थापत्तस्यापि यदि नाशो नस्वीक्रियते चेत्तदा घटस्य मुद्गरादिना चूर्णी-कृतस्यापि लय एव स्यान्न नाशः; इष्टापत्तिरिति चेत्-मुक्तानामपि बुद्धे-र्नाशो न स्यात्; तत्रापि लयस्यैवाकुंठत्वात् । तथा च तेषां पुनरुत्प-त्तिर्दुर्वारैवेतिबोध्यं ॥ "अत एव चोपमा सूर्यकादिव" दितिसूत्रमपि न जीवः प्रतिबिंबरूप इति प्रतिपादयति; किंतु जडजीवधर्मा ब्रह्मणि उपचा-रादुच्यंते न वस्तुतः; तत्र दृष्टांतप्रदर्शनपरं ॥ "न स्थानतोपी" तिसूत्रे-तद्विचारस्यैव प्रकृतत्वात् ॥ सूत्रार्थस्तु यतो ब्रह्मणि पापं चिक्रुधर्मा उप-चारादुच्यंते अत एव "समः प्लुषिणा समो नागेन समो मशकेन समस्त्रिभि-र्लोकैः समोऽनेन सर्वेणे" ति वेदोक्ता उपमापि उपचारादेव तत्तद्धर्मसंबं-धात्; अन्यथा "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादिना उपमानो-पमेयभावराहित्येन प्रतिपादिते पुनरुपमानोपमेयत्वेन प्रतिपादनं विरुद्धं-स्यात् तत्र दृष्टांतः सूर्यकादिवत् सूर्येण सहितं जलं सूर्यकं यथा किरणद्वा-राजलादिसंश्लिष्टस्य सूर्यादेर्ब्रह्मोपमानत्वं "यथाह्ययंज्योतिरात्मावि-वस्वानपोभिन्नाबहुधैकोनुगच्छन् । उपाधिना क्रियते भेदरूप" इति-यथेतरसंश्लिष्टस्योपमानत्वं एवं "समः प्लुषिणे" त्यत्रापि तत्तत्संश्लि-ष्टस्योपमेयत्वमपीति न तत्सूत्रं जीवस्य प्रतिबिंबरूपतां प्रतिपादयति ॥ प्रतिध्वनेराकाशगुणत्वाद्द्वैतसिद्धांतविद्भिः स्वीकारेण तदनभिज्ञस्य-स्वमतमेव खंडयतः आकाशे शब्दप्रतिबिंबदर्शनेनेत्यादिकः प्रलापः-प्रकृतानुपयुक्तत्वादुपेक्षितः ॥

सहस्राक्षे जीवस्य प्रतिबिंबत्वसाधकं मायायां प्रतिबिंबते चितिरिति वदीयाष्टम-श्लोके एवं जीवस्वरसंभवमित्यादिना इष्टप्रतीयत इतिदिगित्यंतेन व्याख्यानेन सहितं

यत्तुजीवस्येत्यादिना सरपक्षाणाममप्रतिपादनाप्रक्रियतइत्यतेन निराकरिष्यतः प्रथम एवं-जीवस्येत्यादि दर्शनेनव्यभिचारित्वाचेत्यत भागमुत्तरयति-यदित्यादिनाप्रष्टव्यानुपयुक्तत्वादुपेक्षितइत्यतेन ॥ परोपन्यस्तश्रुतीनामर्थंतुतद्ग्राहकसूत्रद्वयस्य सिद्धावभाष्यायनुवादद्वाराऽप्येवक्ष्यति ॥ अत पूर्वप्रतिविंबत्वाभावसाधकानुमितिहेतुसक्तदोषभासानुदरिष्यंतोयुक्तयैवाह -तदपिनकिंचिदित्यादि ॥ मायाचेयमिति । इदपचदशप्रकरण्याचित्रदीपाख्येषष्ठप्रकरणे (श्लोक १२५) "मायाचेयतमोरूपातापनीयेतदीरणात । अनुभूर्तितत्रमानंप्रतिजज्ञेश्रुति स्वय" इतिपद्यमस्ति । तापनीयेतदीरणत्तु प्रागुक्तनृसिंहोत्तरतापनीयनवमखण्डे "मायाचतमोरूपानुभूते" रितिकथन । एतेनतत्रप्रतिविंबादरे एवच्छ्रुतिष्याकोपोऽपिध्वनित । सावयवत्वव्याप्यत्वेनेति । यत्प्रतिविम्बग्राहकतत्तत्सावयव यथा-जलदर्पणादिक यत्रयत्रसावयत्वाभाव तत्रतत्रप्रतिविंबग्राहकत्वस्याप्यभाव एव यथा-काशकालदिगादिषु अतोव्यापकसत्सावयवत्वस्यभाव व्याप्यसत्तद्ग्राहकत्वस्यभावेन-

मायाया प्रतिविम्बते चितिरसौ स्वच्छा हि सत्त्वेन सा
गाम्भीर्यस्य जले रवस्य गगने भानात्रभ शब्दयो ॥
छाया तत्र परैरखिरस्कृतिवशात्पञ्चीकृतौ चाम्बरे
रूपं नोद्भवतीयतो नियमन सामान्यतो बाधितम् ॥ ८ ॥

एव जीवस्य परसमतमशल्य निराकृत्य स्वसमत पथान निष्कण्टक चिकीर्षु यथा-ह्यय ज्योतिरात्मविवस्वानपोभिन्नावहुधैकोनुगच्छन् उपाधिनाक्रियतेभेदरूपोदेव क्षेत्रेष्वेवमजोयमात्माज वेशवाभासेनकरोतिविद्याचस्वमेवभवति छयातपौब्रह्मविद् रूपरूपप्रतिरूपोबभूव'एक एवतुभूतात्माभूतेभूतेव्यवस्थित एकधाबहुधाचैवदृश्यतेजलच द्रवदि'त्यादि-श्रुतिसमतम् । आभासएवच अतएवचोपमासूर्यकादिवदित्यादिसूत्रसमत च जीवस्यब्रह्म-प्रतिविम्बत्वमाह-मायायामिति ॥ अत्र कश्चित्प्रलवतिष्ठते ॥ मायात्वेनाभिमता नप्रति-बिम्बभाक् अस्वच्छत्वात् १ दारुवत् ॥ निरवयवत्वात् २ रूपाभावात् ३ रूपवत् ॥ अपरिच्छिन्नत्वात् ४ आत्मवत् आकाशवद्वा ॥ एतेषु प्रतिविम्बापत्तिरेवविपक्षेबाधकस्तर्क ॥ एवम् आत्मा न प्रतिबिम्बते अनवयवत्वात् ५ अपरिच्छिन्नत्वात् ६ आकाशवत् ॥ अरूपत्वात् ७ तद्वत् वायुवच्च ॥ एतयो प्रतिबिम्बापत्तिरेवविपक्षेबाधकस्तर्क ॥ एवच स्वच्छे सावयवे रूपवति परिच्छिन्नएवोपाधौ सावयवस्य रूपवत परिच्छिन्नस्य प्रतिबिम्बनियमेन तर्कपराहतत्वान्नेमानि वाक्यानि प्रतिबिम्बत्वपराणि किन्त्वशत्वप्रतिपादकवाक्यवदन्यथाव्याख्येयानि इति ॥ तत्र अजामेका सत्त्वरजस्तमइति प्रकृतेरित्यादिवचने दृष्ट्या प्रकृते सत्त्वगुणकत्वेन 'मायतुप्रकृति मितिश्रुत्या तस्याएव मायाशब्दवाच्यत्वेन विद्वद्व्यवहारात्सत्त्वात्सजायतेज्ञानमितीश्वरवाक्याच्च सत्त्वस्य स्वच्छत्वेन आत्मावरकतयाऽस्मदीयैस्तमस्साद्दयस्य तत्र स्वीकृतत्वेपि स्वपृष्ठगतघटावरकजतादिपात्रवत्प्रति-बिम्बग्रहप्रयोजकस्वच्छताया प्रत्याख्याने प्रमाणाभावेन सजलकज्जलादिलिप्तपात्रादौ दीपादिप्रतिबिम्बदर्शनात्तदनुगतस्य मायाव्याप्तस्य स्वच्छत्वस्य वक्तुमशक्यत्वेनच प्रतिबिम्बग्रह-

व्याप्यः । तेनतस्येति । सावयवत्वाभावेन तद्ग्राहकत्वाभावस्य । अनुमितीति । माया-प्रतिबिंबग्राहकत्वाभाववती सावयवत्वाभावात्, आकाशादिवदित्यनुमितिसंभवादित्यर्थः । रूपाभावेनेति । अथापिवायव्याकाशादयप्रत्यक्षांवा । तथाचमाया नप्रतिबिंबभाक् रूपाभावात् वायुवदित्यनुमितिः । प्रकाशात्मेत्यादि । एतेनगन्धिदीपादेः प्रकाशरूपस्यैवप्रकाशगुणप्रत्युपादानत्वमपीत्युक्तंभवति ॥ सत्वस्यत्वादशत्वंतुसांख्यैर्यासु "प्रीत्यप्रीतिविषादात्मकाःप्रकाशप्रवृत्तिनियमार्था" इति "सत्वंलघुप्रकाशक" मितिचोक्तमेव । एवंचप्रकाशात्मकत्वेऽपि दीपतत्प्रकाशादेःप्रतिबिंबाधारत्वादर्शनात् सत्वांशस्यापिनतदाधारत्वंसंभवति । जलएवेति । नतुमलिनेकज्जलादौ ॥ स्वच्छसत्वववत्यांप्रतिबिंबमितिप्रसह्यवादेऽपिसत्वांशमात्रे ब्रह्मप्रतिबिंबस्यावतुमायायां । अतोरजस्तमोभ्यां घोरमूढवृत्तिषु जीवोपलब्धिरेवनस्यादितिभावः । विद्यारण्योक्तिरिति । पंचदशीद्वितीयप्रकरणस्थतद्विरोधइत्यर्थः । नचैवमित्यादि । त्रिगुणात्मकत्वं सावयवत्वस्वीकारेहेतुः तत्स्वीकारश्चस्वरूपासिद्धौहेतुः । सावयवत्वाभावस्तु साधन एव हेतुरितिविवेकः । तस्यचेति । सावयवत्वस्य । यत्रयत्रसावयवत्वंतत्रतत्रजन्यत्वं यथापृथिव्यादिष्वितिव्याप्तिस्तन्मतसिद्धा । अतएवाजन्यस्यपरमात्मनस्तन्मतेनिरवयवत्वं । जन्यत्वापत्तिरिति । विमतामायाजन्या सावयवत्वाद्घटवदितिप्रयोगः । अपसिद्धांतः स्यादिति । षडस्माकमनादयइतिसिद्धांतभंगः । अस्वीकारेऽपीति । तार्किकादिदर्शनमनुसृत्याऽस्वीकारे । अपिशब्दो गौणताद्योतकः । वस्तुतःसिद्धांतेतुगगनेतयो स्वीकारएव

---

रूपफलकल्प्यस्वच्छतायाअदृश्यआकाशादाविव तत्र कल्पने बाधकाभावे नचावोहेतुःस्वरूपासिद्धइत्याह ॥ स्वच्छाहिसत्वेनेति ॥ २९ ॥ द्वितीयोपि मायायास्त्रिगुणत्वेन गुणानासावयवत्वेनचस्वरूपासिद्धोहेतुरित्यपिअनेनैवसूचितम् ॥ व्यभिचारश्चेत्याह ॥ स्वस्यगगनेइति ॥ अतएवतृतीयचतुर्थावपिसव्यभिचारौ ॥ आकाशे सावयवत्वस्योत्पत्तिमत्वेन परिच्छिन्नत्वस्यचपादोस्यविश्वाभूतानिअत्यतिष्ठद्दशाङ्गुलस्य एकदेशेनस्थितोजगत् विकारावर्तिचेत्यादिवाक्यैः स्वीकारे तु उक्तरीत्या सावयवत्वस्यश्रुत्यादिभिरेव परिच्छिन्नत्वस्य च मायायामपि सत्वेन स्वरूपासिद्धिरेवद्वितीयचतुर्थयोर्बोद्धव्या ॥ ३० ॥ ननुस्वच्छत्वमात्रस्यैवोपाधौ प्रतिबिम्बग्रहप्रयोजकत्वस्वच्छरूपेऽपि प्रतिबिम्बः स्यादितिचेत्—न; रूपस्य स्वच्छत्वे प्रमाणाभावात् ॥ अस्वच्छद्रव्यगतरूपस्य स्वच्छत्वाभावेन स्वच्छगतस्य तत्वेऽपि स्फटिकपात्रस्थजलप्रतिबिम्बस्य तादृक्पात्रगतप्रतिबिम्बादपृथक्त्ववद्रूपप्रतिबिम्बस्य द्रव्यप्रतिबिम्बादपृथक्त्वात् ॥ अधाराधेयगतयोः प्रतिबिम्बयोरैक्यात् ॥ रूपस्य द्रव्यादपृथक्त्वाच्च ॥ एवं गुणान्तरे क्रियादिषुचसमाधेयम् ॥ अस्वच्छत्वादेव वायुकालदिशाञ्च न प्रतिबिम्बाशङ्का ॥ आत्मनि प्रतिबिम्बाभावस्तुप्रभायामिव प्रतिबिम्बग्रहेविजातीयस्वच्छत्वाभावेन बोध्यः ॥ नचास्मन्मते जलस्थितोरेव प्रतिबिम्बस्वीकारात्प्रभायां तदतिप्रसक्तेरभावेन तादृग्वैजात्यस्वीकारोव्यर्थइतिवाच्यम् ॥ ईदृशनियमस्वीकारस्य श्रुत्यादिप्रामाण्याकल्पनलाघवेनैव तद्योलघुत्वाच्च आकाशे शब्दप्रतिबिम्बदर्शनेन व्यभिचारित्वाच्च ॥

“अत्यतिष्ठद्दशांगुल” मित्यादिशब्दानुरोधात् । स्पष्टश्चाकाशसाम्यमत्यादिस्त्वोकारो-
वृद्धिह्रासभाक्सूत्रादौनिबंधेनच (अ० १ श्लो० २८) ‘आकाशवद्व्यापकंही’त्यादि ।
स्थलेमत्र “लोकवत्त्वाद्दृष्टांत” इतितात्पर्यप्रकाशोक्तवनात्परिच्छिन्नत्वं । जन्यत्वादिनेति ।
तन्मतमनुसृत्येदमुक्त—जन्यत्वानुमापकत्वेति । विमतामायाजन्यापरिच्छिन्नत्वानुसारय-
चरणात् । घटपटात्मानोऽन्वयव्यतिरेकदृष्टांतौ इतिज्ञेयं, प्रभागतेत्यादि । प्रभायामपित्व-
च्छत्वस्यप्रत्यक्षसिद्धत्वात्कनकभूमिजलयोरेवस्वच्छत्वमितिनकुमतस्यमितिभावः । ज्ञान-
स्वरूपत्वादिति । “सत्यंज्ञानमनंतंब्रह्म । भारूपःसत्यसंकल्पः” इत्यादितैत्तिरीयछांदो-
ग्यादिश्रुतिभ्यः‘ज्ञानंज्ञेयंज्ञानगम्य’मित्यादिस्मृतिभ्यश्चव्यवहारात् । एवंचस्वच्छत्वेनविजाती-
यत्वकल्पनंनिर्मूलं, किंचात्मनिवास्तवस्वच्छत्वस्यात्यंताभावे मायायामेवनियमेनतत्सत्वेच
मायोपादानकेषु सर्वेष्वेवास्वच्छत्वमनुवर्तेत; त्रिगुणात्मकत्ववत् ॥ तथाचसर्वत्रैवप्रति-
बिंबप्रतीतिरशक्यवारणेतिमायिकत्वयाभिमतेषुवायुकालदिगादिषु तद्वारणप्रयासोऽव्यर्थः ॥
नाद्यःइति । संकरस्यजातिबाधकत्वेनतत्प्रसंगेसतीति । जातिविशेषत्वंनशक्यंवक्तुमितिभावः ।

जातिबाधकसंग्रहंत्वदाहरंतितार्किकाः—‘व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूप-
हानिरसंबंधो जातिबाधकसंग्रह’इति ॥ प्रकृतेसंकरंस्फुटं दर्शयितुंतल्लक्षणपुरःसरमाहुः—
सचेत्यादिना । संकरश्चेत्यर्थः । एतत्त्रितयसंबंधेनेति । स्वसामानाधिकरण्यं स्वाभावसामा-
नाधिकरण्यं स्ववृत्तित्वं चेतिसंबंधत्रयरूपोयःसंबंधविशेषस्तेनजातिविशिष्टत्वं संकरइति
योजना ॥ अत्रसर्वत्रस्वंजातिरेव । इहविवक्षितंस्ववृत्तित्वं स्पष्टयति—स्वसमानाधिकरणे-
नेति । यथाशरीरत्वंनजातिः उक्तत्रितयरूपसंबंधेन पृथ्वीत्वजलत्वादिजातिवैशिष्ट्यात् ।
तथाहि अस्मदादिशरीरेषुपृथिवीत्वजातिसामानाधिकरण्येनशरीरत्वस्य तद्वैशिष्ट्यं ।
नैयायिकरीत्यावरुणलोकस्थजलीयशरीरेषु पृथिवीत्वाभावसामानाधिकरण्येनतस्यत-
द्वैशिष्ट्यं । घटादिषुपृथिवीत्वसमानाधिकरणो जलीयादिशरीरनिरूपितोयोभेदस्तत्प्रति-
योगितावच्छेदकत्वसंबंधेनपृथिवीत्ववृत्तित्वंच शरीरत्वेऽस्त्येवेतिप्रकृतसांकर्यान्नजातित्वं ॥
एवंस्वच्छत्वेपिसंगमयति—तथाचेत्यादिना । विद्यमानत्वादिति । अयंसंकरप्रसंगादिति-
पूर्वोक्तहेतौहेतुः । ननुत्रिष्वन्यतमसंबंधमात्रेणोभयरूपसंबंधमात्रेणवा जातिवैशिष्ट्य-
मस्तु, किंत्रितयरूपेण ? तेनेति चेत्स्वसामानाधिकरण्येनव्यापकजातिवैशिष्ट्यं व्याप्यजा-
तिना । स्वाभावसामानाधिकरण्येन तद्वैशिष्ट्यंव्यधिकरणजातीनां नियतव्यधिकरणजा-
तिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वंचतासामस्त्येवेत्यन्यतममात्रोपादाने प्रागेव-
जातिमात्रोच्छेदप्रसंगादिदूषणंसुगममेवेति तदनुक्त्वोभयमात्रग्रहणेदोषमाहुः—अतद्द्रव्य-
त्वस्येत्यादिना । द्रव्यत्वं हिपृथिव्यांपृथिवीत्वसामानाधिकरण्येनजलादिषुतदभावसामाना-
धिकरण्येनचवर्ततएव । पृथिवीत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकंनुतन्नभवति,
पृथिव्यांद्रव्यप्रतियोगिकभेदस्यासत्वादितिभावः ॥ पृथिवीत्वादीनामित्यादि । पृथिवीत्वंहि-
पृथिव्यांद्रव्यसमानाधिकरणंद्रव्यत्वाधिकरणजलादिनिष्ठभेदप्रतियोगितावच्छेदकंचास्त्येव ।
द्रव्यत्वाभावसामानाधिकरण्यंतुनैवभवितुमर्हतीतिभावः । एवंजलत्वादिष्वपिबोध्यं ।
जलत्वस्येत्यादि । जलत्वंहिपृथ्वीत्वाभावाधिकरणजलवृत्तिभवति । पृथिवीत्ववन्निष्ठोजल-

प्रतियोगिकोयोभेद.तत्प्रतियोगितावच्छेदकंचभवति । पृथ्वीत्वसमानाधिकरणंतुतत्सर्व-
थानभवितुमर्हतीतिभावः । एवंचनियतव्यधिकरणताकपृथ्वीत्वजलत्वादिजातिषु पृथ्वी-
त्वादिषुव्याप्यजातिषु द्रव्यत्वादिषुव्यापकजातिषुचक्रमेणजातित्वव्याघवारणाय स्वसामाना-
धिकरण्यादित्रितयनिवेशइतिनिगर्वः । आत्माश्रयप्रसंगादितिप्रतिबिंबग्राहकत्वरूपमेव
स्वच्छत्वं प्रतिबिंबग्रहेहेतुरित्यात्माश्रय उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यात्स्फुट-
एव। प्रकाशकत्वमिति। मण्यादिषुतथादर्शनादितिभावः।प्रतिबिंबाभावप्रसंगादिति। इह-
दीपादौ प्रतिबिंबापत्तिप्रसंगादित्यधिकमनुसंधेयं। ननुप्रागुक्तमत्रतत्तद्विषयश्रुतिवशप्रति-
बिंबत्वंस्यादित्यतआहु.-नापीत्यादि। तत्रप्रथमं (अ० २ पा० ३ सू० ५०) "आभास-
एवचे" ति सूत्रस्यभाष्यात्तत्प्रकाशाच्चकंचिदंशमेकीकृत्यानुवदंति-ननुसच्चिदानंदस्येत्या-
दिना। "एकएवहिभूतात्मे" तिश्रुत्यर्थं निर्मलयितुं स्वयंशंकंते-नन्वेकइति। (अ० २
पा० ३ सू० ३०) "यावदात्मभावित्वाच्चनदोष" इतिसूत्रप्रकाशादिभ्य.कंचिदंशम-
र्थत आनुपूर्वीतश्च यथोचितमनुवदंति-यथाचंद्रस्येत्यादिना। मुक्तानामित्यादि। अपि-
शब्दाद्ब्राह्मणोऽपि । तस्योपाधेश्चविभुत्वात्सर्वत्रद्विसंयोगोऽवश्यवाच्यइतिप्रकाशाशयः ।
उपाधेर्नाशेनेति । छांदोग्याष्टमाध्यायबृहदारण्यकद्वितीयाध्यायाद्यब्राह्मणकौषीतकि-
ब्राह्मणचतुर्थाध्यायादिषुसुषुप्तिकालेजीवस्य सकलतदुपाधीनांचब्रह्मणिप्रवेशस्याम्नानात्
"सुषुप्तिकालेसकलेविलीने" इत्यादिश्रुत्यंतराच्चेतयेतिभावः । नचबुद्ध्यतिरिक्तोपाधि-
नामेवतदाप्रवेशादिंकल्प्यं । तथासति तत्रत्ये आत्मव्युच्चरणवाक्ये बुद्धिव्युच्चरणा-
दात्मव्युच्चरणोपचारइति स्वव्याख्यातार्थव्याघातापातात् । एवमन्यदप्यूह्यं। तद्विचार-
स्यैवेति । तृतीयस्यद्वितीयेपादे (सू० ११) "नस्थानतोऽपिपरस्योभयलिंगंसर्वत्रहि"
तिसूत्रमारभ्यब्रह्मधर्मविचारएवसविशेषनिर्विशेषश्रुतिवाक्यानिविषयीकृत्यप्रक्रांतो ननुजी-
वस्वरूपविचारस्यतत्रगंधोऽपि । परस्येत्यातद्वापूर्ते दर्शितत्वात्द्वितीयस्यतृतीयेपादेजीव-
विचारस्यविस्तरेणकृतत्वाच्च । अतोब्रह्मणेधर्मविचारस्यैवात्रप्रकृतत्वमिति। नैतेनजीवस्य-
प्रतिबिंबताशक्यवचना। (अ० ३ पा० २ सू० १८) अतएवचोपमासूर्यकादिवदिति-
सूत्रस्यभाष्याच्चप्रकाशाच्चकंचिदंशमर्थत आनुपूर्वीलेशतश्चानुवदंति-सूत्रार्थस्त्वित्या-
दिना। समःप्लुषिणेति बृहदारण्यकतृतीयाध्यायेतृतीयब्राह्मणे (पृ० १११) "यद्देव-
समःप्लुषिणासमोमशकेनसमोनागेनसमएभिस्त्रिभिर्लोकैःसमोनेनसर्वेण" इतिकाण्वैः
पठ्यते ॥ माध्यंदिनानामपि (पृ० १०४९) तुल्यःपाठः ॥ अयंस्तुप्लुषिणापुत्ति-
कादेहेनातिसूक्ष्मेणसम.इत्यादिस्तुत्यः ॥ मशकस्ततोऽधिकः नागःसर्पोदीर्घेकुंडलाद्यनेका-
कारोमध्यम गजोवातिस्थूलः ततोधिकास्त्रयोलोकाःसर्वंसंपूर्णंब्रह्मांडस्थंचराचरंतेनतेन-
तुल्यः ॥ वस्तुतस्त्वाकाशइवसर्वपरिमाणाश्रयइतिवृद्धिह्रासभाक्त्वोपूर्वोक्तयने-उपचारा-
देवतत्तद्धर्मसंबंधादिति । उपचारोत्र प्रपंचधर्मसंबंधेहेतुर्नतुपूर्वत्र । नतत्समइति ।
श्वेताश्वतरवाक्यमिदं उपमानोपमेयत्वेनेति। उपमानैःप्लुष्यादिभिस्तथात्वेन। अल्पमिति ।
सौत्रशब्दस्यार्थोऽयं। 'प्लुसिकः कंदोलिकंतुनो' रित्यमरोक्तेः। तत्संश्लिष्टस्येति। प्लुष्यादि-
सर्वसंश्लिष्टस्य । अत्रैतावत्संदर्भाभिप्रायमनुसंधायकिंचिद्ब्रूमः वदीयसप्तमश्लोकस्यखंडन

एवंजीवस्याशुत्वम शत्वम्युचरणादिकचसिद्ध अथतस्यप्रतिबिंबत्वापादक एकदेशिनोष्टमः श्लोक सम्याख्य स्वध्यते । तत्रतेनप्रतिबिंबत्वसाधनायश्रुतिशास्त्रपचकसूत्रद्वयचादाबुपन्यस्त । तदर्थ प्रथमनिर्णीयते । तत्र "यथाह्ययज्योतिरात्माविवस्वानपोभिन्नाबहुधेकोनुगच्छन् । उपाधिनाक्रियतेभेदरूपोदेवक्षेत्रेष्वेवमनोयमात्मे" तियाक्यतु एकस्यापिब्रह्मणोनानात्वेनप्रत्ययेदृष्टांतवद्वतितुजीवस्यप्रतिबिंबत्व । तथाहि-यथाभयमेकोविवस्वान्सूर्यःभिन्ना स्वप पृथग्भूता परस्परप्रतियोगिकभेदवतीश्च अपोनरानि ज्योतिरात्माअनुगच्छन् स्वाशुज्योतीरूपेणानुप्रविशन्उपाधिनानरादिरूपेणभेदरूप क्रियते, नानात्वप्रकारकप्रतीतिविषयतामानीयते, एवदेव जगन्निर्माणक्रीडामोद प्रकाशादिमान्अयमात्मापरमेश्वर पृथक्कृतेपुक्षेत्रेपुस्वाशजीवरूपेणानुप्रविशन् नानात्वप्रतीतिविषय क्रियतइत्यर्थ ॥ सूर्यादिहिदर्पणनलादौप्रतिबिंबते तेनांशेनप्रविशतिचमण्डलाकारादिसाक्षात्कारात्उष्णस्पर्शानुभावात् चक्षु पराहतिदर्शनाच ॥ प्रतिबिंबमात्रेतु सत्युष्णस्पर्शादिकनानुभूयेत । न हिमहाज्वरातपुरुपस्यावितसपय प्रभृतेर्वाप्रतिबिंबमुष्णभवति अतएवश्रुतावप्यनुगच्छन्नित्युच्यते नतुप्रतिबिंबमानइति ॥ ब्रह्मणोजीवरूपेणप्रवेशस्तु "अनेनजीवेनात्मनानुप्रविश्ये" त्यादिश्रुतिप्रसिद्ध ॥ किचआपोहितेनोजन्या "अग्नराप ॥ तदपोसृजते" इत्यादितैत्तिरीयच्छांदोग्यादिश्रुतिभ्य ॥ इदानीमपिवृष्टिद्वारासूर्यादाविर्भवति "यामि रादित्यस्तामि पर्जन्योवर्पति" 'आदित्याज्जायतेवृष्टि'रित्यादिश्रुतिस्मृतिभ्य ॥ अत स्वतआविर्भूतेष्वपिविजातीयतयाप्रतीयमानेपुजलेपुसूर्यस्तेजोशेनप्रविष्ट सनूयथानानादृश्यते तथा तस्मादाविर्भूतेष्वपिचिदानदतिरोधानेनविजातीयवयादृश्यमानेपुजलेपुशरीरेपुजीवरूपेणप्र विष्ट ब्रह्मनानेवभातीतिवहुतरसाधर्म्यं इदमेवाभिप्रेत्यमणिमुकुराद्यपहायश्रुतावापएव दृष्टांतउपात्ता । एतदेवचोपबृंहितप्रथमस्कंधे "यथाह्यवहितोवह्नि दारुष्वेक स्वयोनिपु ॥ नानेवभातिविश्वात्मा भूतेपुचतथापुमानि"ति । वस्तुतस्तुतत्रतत्रप्रविष्टास्तेजोंशायथाभासानिधेरनतिरिक्तास्तथैवजीवाब्रह्मण अयमेवैतच्छुत्याशयोभगवताबोध्यते-"क्षेत्रज्ञचापिमाविद्धिसर्वक्षेत्रेपुभारते"ति । अत्रस्मृतौचकारेणक्षेत्रांतर्गतभूतेंद्रियादिकसमुच्चीयतेतेनविजातीयतयाप्रतीयमानान्यपिजलानि यथास्वोपादानतेन प्रतियोगिकतात्त्विकभेदवतिनभवति तथाक्षेत्राण्यपिनब्रह्मभेदवतीतिफलति अतएव 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानयत्तज्ज्ञानमतममे'त्युभयज्ञानस्यस्वज्ञानत्वसर्यते । इदप्रसगादुक्त ॥ यदितुत्वदभिमतश्रुतिरभिप्रयात्तर्हिविवस्वतोजलइवमायायाब्रह्मण प्रतिबिंबजीवइत्यवक्ष्यात् । तथाअकथनात् भेदरूप क्रियतइति कथनाच ॥ प्रतीयमानभेदस्यावास्तवत्वबोधनमेवश्रुत्याशयगोचर किचजलस्थानापन्नतयात्वया मायोच्यते तथाचसतिश्रुतौदार्ष्टांतिककोटौ तस्याअनुपादान क्षेत्राणामुपादानत्वन्मतबाधक । नचक्षत्रशब्दोमायापरोवाच्य , तथाग्राहकवेदांतिसमतमानानुपलब्धे । दृष्टांतदार्ष्टांतिकयोर्बहुवचनविरोधाच ॥ नचमायाबहुत्ववाच्य, मायास्त्वितिवक्तव्येमायायाप्रतिबिंबवइतिस्वोक्तिविरोधात् । सर्वासाविभुत्वाविभुत्वाद्यनेकविचारैर्व्याकुलीभावापाताच । अत "इदशरीरकौंतेयक्षेत्रमित्यभिधीयते ।" इतिभगवद्व्याख्यानुसार्येवार्थोयोग्य ॥ एतेन "एकएवहिभूतात्मासर्वभूतेष्ववस्थित' ॥ एकधाबहुधाचैवदृश्यतेजलचद्रव"

त्वेत्याथर्वणब्रह्मोपनिषच्छ्रुतिरपिव्याख्याता ॥ तथाहिकिमत्रभूतात्मशब्देनजीवोऽभिप्रेयेत
आहोस्विद्ब्रह्म ? नाद्य, जीवानांप्रतिशरीरभिन्नत्वेन'एकएवहिभूतेभूतेव्यवस्थित'इत्युक्ति-
विरोधात् । एकस्यैवजीवस्य एकधाबहुधादर्शनयोरयोगाच्च । एकजीववादस्तु पूर्वोक्ताने-
कदोषग्रस्त, असङ्ख्याङ्गीकारेऽप्येकरूपादर्शनस्याशक्यत्वादसत्त्वात् जीवभावनित्यतापत्त्याप-
सिद्धान्तोऽद्वैतमोक्षयोरुच्छेदश्च ॥ द्वितीयश्चेदुच्यते "भूतात्माभूतभावन । एकोविष्णुर्मह-
द्भूतपृथग्भूतान्यनेकश ॥ त्रींल्लोकान्व्याप्यभूतात्माभुङ्क्ते विश्वभुगव्यय ' इतिभारतीयवा-
मसङ्गतत्वात्वैकशब्दतयातथैवासिद्धे । परमेश्वरस्तिजलचन्द्रवौल्यब्रह्मण प्राप्तमितिनताव-
ज्जीवस्यप्रतिबिंबत्वसिद्धि । नन्वत्रमनोहिद्विविधप्रोक्त'' मित्युपक्रमेण "मनोग्रहणलिं-
गाज्जीवप्रकरणमेतत् अतोनास्य मन्त्रस्यब्रह्मपरत्वमितिचेत्-मैवं, अन्यथानुपपत्त्याप्रकरण-
बाधात् ॥ वस्तुतस्तुतत्रकामसंगरहितत्वयाशुद्धमनसोमन्त्रत्रयेणमुक्तिरुक्तामोक्षेकीदृशं-
स्वरूपमित्याकाङ्क्षाया "तदात्मपरमपद" मित्यक्षर "नैवचिन्त्यनचाचिन्त्यमचिन्त्यचिन्त्यमेव-
च"त्यादिनाविरुद्धधर्माश्रयत्वादिकंबोधयित्वा "ब्रह्मसंपद्यतेतदा तदेवनिष्कलंब्रह्मनिर्विकल्प-
निरञ्जनतद्ब्रह्माहमितिज्ञात्वाब्रह्मसंपद्यतेध्रुव" मित्यादिनाविस्पष्टंब्रह्मणोनिरूपणात् । जीवा-
नांब्रह्माभेदबोधनायप्रवृत्तस्य "एकएवही" तिमन्त्रस्यब्रह्मपरत्वे ॥ नप्रकरणविरोध-
बाधोऽपि । एतेनास्यजीवेसमन्वयवदत्तमप्ययुक्तं । अयस्तु एकएवभूतात्मापरमेश्वरोभूते-
भूतेप्रतिशरीरंव्यवस्थित विंशत्पाकारेणांशेनावस्थित सन् एकधाबहुधाचैवदृश्यते एकस्या-
नेकधादृश्यानेदर्शनेचदृष्टान्तमाह-जलचन्द्रवदिति । यथाजलचन्द्रमाअंशरूपेणांशेनस्थित ।
एकधाचन्द्ररूपेणबहुधानेकसंख्याकपात्रादिरूपेणचदृश्यते इतिव्याख्यात ॥ अतोऽत्राप्येक-
स्यनानात्वप्रतीतिपूर्वं श्रुतिदृष्टान्तार्थं सिध्यति ॥ यदितुत्वदभिमतश्रुतिर्निरस्येत् तर्हिमाया-
याप्रतिबिंबितइत्यब्रूयात् । नतुतद्विरुद्धं, 'भूतेभूतेव्यवस्थितइतिएकधाबहुधेतिच'
भूतानांजलस्थानांपञ्चतानुरीकारात् । अतोजलेचन्द्रस्येवमायायांब्रह्मण प्रतिबिंबाजीवाइति-
स्वयंसद्धास्याक्षरेभ्योनलभ्यते ॥ यच्चागामिपथेचन्द्रमण्डलेजलमन्वेशाभावादितिवक्ष्यते,-तद-
प्येतेननिराकृतं, तेजोऽशप्रवेशमन्तरासूर्यचन्द्रयो प्रतिबिंबप्रकाशानुभवस्य औष्ण्यशैत्यानु-
भवस्यचायोगात् ॥ वर्णयन्तिचैवं प्रतिबिंबस्यांशत्वं —यथाहवराहमिहिर । "सलिलम-
येशशिनिरवेर्दीधितयोमूर्छितास्तमोनैशं ॥ क्षपयन्तिदर्पणोदरनिहिताइवमन्दिरस्यान्त'' रिति ।
माघोऽप्याहतुर्थसर्गे "दर्पणनिर्मलासुपतितेघनतिमिरमुषिज्योतिषिरौप्यभित्तिपुर प्रति-
फलतिमुहु ॥ व्रीडमसमुखोऽविरमणैरपहृतवसना काञ्चनकन्दरासुतरुणीरिहनयतिरवि''
रिति ॥ यच्चद्वितीय "जीवशाखाभासेनें" तित्रयमुपन्यस्त—तदपिनतदिष्टसाधकं,
तत्र हिदेवैः पृष्ट प्रजापति "उपद्रष्टानुमन्तैषआत्मे', त्याद्युपदिदेश तत्र "उपद्रष्टानुम-
न्तैषआत्मे" तिजीवस्वरूपमुक्त्वा "सिद्धश्चिद्रूपएवे" तिब्रह्माभेदबोधयित्वा "अविकारो-
ऽप्युपलब्धात्मवैत्र" तिब्रह्मणएवस्वाभाविकसत्त्वंजीवरूपेणसर्वत्रोपलब्धृत्वनिरूप्य "नह्यस्ति-
द्वैतसिद्धिरात्मैवसिद्धोऽद्वितीयोमाययाह्यन्यदेवे" त्यादिनासर्वस्यब्रह्मात्मकत्वहेतुत्वस्वबन्ध-
मजनकाद्यवस्थात्तुच्छत्वानेकत्वादीनांशक्तिमायाहेतुकत्वंचवदन् सर्वस्यैकत्वेकथंनानादेहाभि-
मान. । कथंचनियम्यनियामकभावादीतिशङ्कांवारयन्नाह "एवामायास्वव्यतिरिक्तानि-

परिपूर्णानिक्षेत्राणिदर्शयित्वा जीवेशावाभासेनकरोतिमायाचाविद्याचस्वयमेवभवती" ति ॥४
अत्रजीवशब्देनमनुष्यादय कार्यजीवा 'जीवोजीवविहायमा, जीवोजीवेननिर्मुक्त , अहस्ता-
विसहस्ताना अपदानिचतुष्पदा ॥ फल्गुनीतत्रमहताजीवोजीवस्यजीवन मित्यादौप्रसिद्धा ।
ईशशब्देनचब्रह्मादय पृथगीशमानिनोलोकनियामकत्वेनप्रसिद्धा । तथाचखाऽविनाभूतानि
नानाविधक्षेत्राणिप्रदर्श्य आभासेनदेहोहमितिमिथ्याज्ञानेन जीवेशौकरोति, अयजीवोऽय-
मीश्वरइतिसपादयति । करोतेरर्थश्चेदशप्रायस्त्वयाऽपिवाच्य , अन्यथाकार्यत्वापत्त्याजीवे-
श्वरयो स्यात येणानादित्ववादोभज्येत 'अजोनित्य" इत्यादीनिचविरुध्येरन् ॥ अग्रेच
"सर्वसर्वमयसर्वेजीवा सर्वमया सर्वावस्थासु तथाप्यल्पा" इतिवस्तुतोब्रह्मात्मकत्वेनसर्व-
म्यसर्वात्मकत्वजीवानाव्युत्पादकरणोत्तरमल्पत्वचोच्यते । नहीदप्रतिबिंबपक्षेपूर्वोत्तरसगच्छ
ते ॥ अनुपदचाग्रे "सर्वाएषभूतानींद्रियाणिविराजदेवता कोशाश्चसृष्ट्वाप्रविश्यामूढोमूढ-
इवव्यवहरन्नास्तेमाययैवे" तिपरब्रह्मणएवभूतादिनिर्माण 'अनेनजीवेनात्मनानुप्रविश्ये"
तिश्रुत्यतरान्नातस्यात्रप्रवेश लीलयाजीवस्यमोहोव्यवहरण, अत्रसर्वत्रमायाएवकरणत्वच-
श्राव्यतेअतोऽप्युक्तमेवयुक्त । अग्रेच 'तस्मादद्वयएवायमात्मे" त्यादिनात्मस्वरूपनिरूप्य
"सत्तामात्रहीदसर्वंसदेवपुरस्तात्सिद्धहिब्रह्म" तिजगतोऽप्याविद्यकत्वभ्रमवारयति ।
विस्तरशस्तु अविरोधाध्यायपष्ठसूत्रभाष्यप्रकाशेउपनिषद्भाष्येचश्रीपुरुषोत्तमचरणैनिरूपणा-
यिनिखिलेयश्रुतिरितिकिमिहबहुना । यत्तुएतच्छ्रुत्यर्थविद्वन्मण्डनटीकोक्तमनूद्य ( तत्रयुक्त-
तादृशयोरपितिबिंबत्वेनियममात्रभगापत्त्याऽतरङ्गाविवादश्चेदादावेवतुतोनहीविन्यायापा
तात् हिरण्यगर्भादेरीश्वरत्वेमानाभावाच्च ॥ जीवोजीवमित्यस्यत्वयमर्थ –जीव जीवात्माजी-
वजीवनकारण लिंगशरीरविहायमासपद्यते तथाचकुतोजीवात्तरस्यप्रमिति ) रित्यग्रेवक्ष्यते,-
तत्तुच्छ, उक्तरीतिश्वेअस्माकीनानाव्याख्यानेकार्यजीवेश्वरयोरपिप्रतिबिंबत्वासिध्याऽडावि-
वाहन्यायानवतारात् अत्रकार्यजीवस्याविकृतब्रह्मरूपतोक्ति वत्वाश्रुतिश्च ॥ इहहि "क्षेत्राणि-
दर्शयित्वा" इतिपूर्वकालविहितक्त्वाप्रत्ययश्रुत्यामायाप्रयोजककर्तृकक्षेत्रप्रदर्शनजीवेशकर-
णात्प्राक्कालिकनिश्चीयते । तत्यक साक्षात्कर्तास्यात् ? त्वन्मतविवततयोत्ताना क्षेत्राणाद्रष्टृ-
त्वस्य विशुद्धचित्यऽसभवाज्जीवश्वरयोश्चतदानीमनिष्पादात् ॥ तस्माणिजर्थव्यापारेणाक्षि-
प्यमाणानाक्षेत्रद्रष्टृणाचिदशकाणुजीवान पूर्वमेवविद्यमानतायाअर्थापत्तिसिद्धत्वात् श्रुति-
विषयौजीवेशावन्यावेवाचौ । अन्यथामायायाकार्यत्वापत्त्यातथानित्यत्वद्वाभेदादिबो-
धकानेकश्रुतिविप्लव । कार्यत्वनचतवानादिजीवेश्वरवादोपिभज्येत । एव हिरण्यगर्भादाना-
कार्येश्वरत्वमान 'योब्रह्माणविदधातिपूर्वं ॥ हिरण्यगर्भ समवर्ततात्र, भूतस्यजात पति-
रेकआसीत् ॥ ब्रह्मादेवानाप्रथम सबभूवविश्वस्यकर्ताभुवनस्यगोप्ता ॥ सर्वशरीरीप्रथम"
पूर्वमादिश्रुतिवाक्येषुपरमात्मकार्यत्वस्यअवरनिरूपितेश्वरत्वस्यचश्रवणमनुसधेयम् ॥ तेषा-
देहाद्याभासश्चाष्टमदशमस्कन्धादिषु ( स्कध ८ अ० ३ श्लो० ३० ) ब्रह्मादयोविविधालि-
गमिथाभिमाना ( स्क० १० अ० १४ श्लो० १० ) 'अत क्षमस्वाच्युतमेरजोभुवोह्यजा-
नतस्त्वत्पृथगीशमानिन" इतिस्पष्ट । 'जीवोजीव मित्यस्य याख्यानतुजीवशब्दस्यार्थांतरेपि-
वृत्तिमेवसमर्थयतीतिनाऽस्मत्प्रतिकूल्यार्किचप्रसिद्धत्वयाजीवेशपदयोस्त्वदभिमतार्थकत्वादरणे-

पिनानेनतयोः प्रतिबिंबत्वसिद्धत्ति, तृतीयानिर्दिष्टाभासपदार्थस्यजीवेशकरणतयाहेतुतया-थाऽन्वयस्यैवप्रतीतातयोराभासतायाऽलाभात् । अभेदेतृतीयादरेतुमूलविवरणावसरेव-क्ष्यते । तथाप्याभासपदप्रह्माभासादिवन्मुख्यब्रह्मधर्मतिरोभावाभिप्रायमेवसूत्रैकवाक्यता लाभादिति ॥ एकादशस्कन्धपचविंशाध्यायस्थस्य ( श्लो० ३५ ) "सपद्यतेगुणैर्युक्तोजीवो-जीवविहायमाम् ॥ जीवाजीवेननिर्मुक्तोगुणैश्चाशयसम्भवै ॥ मयैवब्रह्मणापूर्णानबहिर्नांतर-श्चरे" दितिवाक्यस्याप्यर्थंपुरतोमूलविवरणावसरेऽन्याख्यास्याम ॥ अथतदुदाहृत तृतीय-वाक्यकठवल्लीषु तृतीयवल्ल्यारम्भे "ऋतपिबंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्द्धे । छाया तपौब्रह्मविदोवदंति पचाग्नयोयेचत्रिणाचिकेता" इतिपठ्यते । तदपिन प्रतिबिंबत्वसाधक भवति, छायाप्रतिबिंबयोर्भेदात् । छायाहिपुरुषादेर्येदिग्वच्छेदेनसूर्यादिर्भवतितस्समुख-दिक्त्वयेवनियमेनभवति । प्रतिबिंबतुसर्वत्र । साचसर्वत प्रकाशेसतिनोत्पद्यते यथापरित -प्रदीपपङ्क्तिप्रभासितेसदने । साधारण्येनमलिनेनिर्मलेचाश्रयेदृश्यासरूपाप्रतीयतेतेजस साम्निध्यविप्रकर्षप्रौढ्यऽप्रौढ्यादिनाह्रस्वदीर्घत्वेचापद्यते । महस्विनोमिहिरादेश्चसानैव-भवति ॥ प्रतिबिंबतु परित प्रकाशेऽपि दृश्यते । निर्मलएवाश्रये बिंबसरूपमेवानुभूयते ।-नाप्युक्तहेतुभ्यो ह्रसतिदैर्घ्यंवाप्नोति । महस्विनोऽपितद्भवति । एवछायाप्रतिबिंबयोर-विरेकादेव श्रीभागवते भगवान् भेदेननिर्दिशति ( स्क० ११ अ० २८ श्लो० ५ ).-'छायाप्रत्याह्वयाभासा'इति ॥ आभासशब्दसाजात्याप्रतिबिंबस्याप्युपलक्षक । प्रतिबिंबत्व साधयितु आभासएवचेतिसूत्रमाभासपदघटितश्रुतिंचोपन्यस्यताभवताआभासशब्दस्यैव प्रतिबिंबवाचकत्वमवाच्य ॥ शब्दान्तरादेभेदकत्वतुपूर्वतन्त्रे "शब्दान्तरे कर्मभेद" इत्याद्य धिकरणेपुस्पष्ट ॥ अत प्रतिबिंबत्वसाधनाय छायात्वबोधकवाक्योपन्यासोधाष्टर्यात् ॥ किंचछायाहिसूर्यचन्द्रादिप्रकाशातपादेवभवति, अत प्रकृतेपुरुषच्छाया तदाश्रयस्थानापन्न-ब्रह्मजीवाविद्यातिरिक्तआतपस्थानीय कश्चिद्देतु स्वीकार्य , सचाप्रसिद्ध , अपिचातपेपुरुषा-देरेवछायाभवति, नतुकदाचिदप्यातपस्यातोत्रब्रह्मणएवातपत्वोत्तया तस्यब्रह्मप्रतिबिंबत्व-मपिमनोरथमात्र किंच प्रतिबिंबत्वे 'ऋतपिबता'विति पानमपिनोपपद्येत भुजानपुरुषस्य-प्रतिबिंबस्यभुजानवत्प्रतीयमानत्वेपिवस्तुत पुरुषएवभुक्तेनतुतत् । तथाचब्रह्मण एवपाना-दिक्रियाश्रयत्वी नतुजीवस्येति महानेवापसिद्धान्त ॥ तथाद्वितीयपादोक्तो गुहाप्रवेशो-पिनसगच्छेत । इहगुहाशब्देनाविद्यति करण वाचाच्य, तयोर्जीवकल्पितत्वेन जीवोपजीव्य-त्वात् , जीवस्यचतदधिष्ठानकप्रतिबिंबत्वेनतदुपजीव्यकत्वादन्योन्याश्रयेनैकतरस्याप्य-सिध्येः । तथाजीवस्यछायाप्रतिबिंबान्यतरत्वेप्यदृष्टीकलाविशेषेणब्रह्मविदातद्दर्शनायोगा-द्ब्रह्मविदोवदंतीत्यशोपिनार्थतायुज्येत ॥ एवएतद्वाक्यतोमे "आत्मानरथिनविद्धी"-त्यादीना 'यच्छेद्वाङ्मनसीप्राज्ञ ' इत्यतोकारयित्ववदयावद्दर्शेन्द्रियत्वपरपदप्राप्तिप्रभृतयो-धर्मा प्रतिबिंबत्वेसतिनोपपद्येरन् बिंबेतदभावात्उपाधे सर्वजीवेष्साधारणत्वाच्च ॥ अतोत्रजीवस्यानर्दादितिरोभावेनापिहितप्रकाशस्याच्छायात्वमुच्यते ब्रह्मणस्तुतदभावादात-पत्व ॥ अथतदुक्ततुर्यवाक्यमपितत्रैवपचमवल्ल्या "अग्निर्यथैकोभुवनंप्रविष्टोरूपरूपप्रति-रूपोबभूव । एकस्तथासर्वभूतान्तरात्मारूपरूपप्रतिरूपोबहिश्च । वायुर्यथैकोभुवनंप्रविष्ट"-

इति पादत्रयतदेवएवंद्विकृत्व पठ्यते । तदपिवाक्यार्थस्यपूर्वोक्तत्तरवाक्यानाचविचारेन-जीवस्यप्रतिबिंबत्वासाधकभवितुमर्हति । इहजीवस्यनाम्नोऽप्यनुचरणात् । प्रतिरूपशब्दस्य-कथञ्चित्प्रतिबिंबार्थकत्वागीकारेपिप्रत्युतब्रह्मणस्तथात्वापत्ते मूलरूपार्थेनत्वत्रप्रतिबिंब-वादगधस्याप्यसिद्धे । नचात्रवाक्येजीव प्रतिरूपशब्दार्थइतिशक्य, एकस्त्वसर्वभूततरा-त्मत्वादिव्याकोपात् । "एतत्आत्मातर्याम्यमृत । अतस्तद्धमापदेशादवर्याम्यधिदैवा-दिष्वि" त्यादिश्रुतिसूत्रानुरोधेनवाक्यस्य ब्रह्मपरतायाएवसिद्धे शंकराचार्यरपितथैवागी-कारेणत्वयान्यथयितुमशक्यत्वाच । तदेवशुक्रतद्ब्रह्मतदेवामृतमुच्यते । तस्मिंल्लोकाश्रिता - सर्वेतदुनात्येतिकश्चने" तिव्यवहितपूर्ववाक्येन "सूर्योयथे" त्यादिभि "नयत्रसूर्योभाती" त्यंतैरुत्तरवाक्यैरपितथैवनिश्चयाच ॥ तथाचायवाक्यार्थ यथा"एकोप्यग्नि भुवनलोकप्रविष्ट सन्रूपरूप" दार्वादितत्तत्स्वाश्रयवस्तुप्रतिसप्रतिरूपस्तत्तदनुरूपाकारोनानाविधोभवति वस्तुतस्त्वग्निरेकएव तथापरमात्माएकोपि "तत्सृष्ट्वातदेवानुप्राविश" दितिश्रुत्यास्वरूपत सृष्टेष्वपिसर्वभूतेषुतत्तत्कार्यनिर्वाहायानुप्रविष्टोनानारूपोभाति मूलरूपेणत्वेकएव । एत-देव ( स्क० १ अ० २ श्लो० ३२ ) 'यथाह्यवहितोवह्नि रित्यादिश्रीभागवतादि-वचनेपुस्फुटंति ॥ यथाचएकोपिवायुर्देहप्रविष्ट सन् "हृदिप्राणोगुदेपान"इतिनानाभाव-मापद्यते, तुल्यमन्यत् ॥ यदिश्रुति प्रतिबिंबमभिप्रेप्यत् नहितर्हिवायुर्दृष्टांतत्वेनावक्ष्यत्, तस्यप्रतिबिंबाभावात् ॥ अतएवत्वदाचार्यैस्तुकठभाष्य "रूपरूपप्रतिदार्वादिदाह्यभेद-प्रतीत्यर्थ प्रतिरूपस्तत्रतत्रप्रतिरूपवानुदाह्यभेदनबहुविधोबभूवएकएवे" तिव्याख्यायि ॥ एतदपिपरोक्तमभ्युपेत्यनूम । क्षस्मदीयास्तुरूपरूपमितिणमुलतमाश्रित्य रूपयित्वारूप यित्वाप्रतिपुस्तकन्यायेनमूलरूपोबभूवेत्यपिव्याचक्षते एवसर्वोपादानत्वादवप्राप्ता अत्र-गत्तदु स्वाद परस्मि सबधतका अव्यवहितोत्तरयासूर्योयथेति ऋचाआरयित्वाप्रवेष्टव्या-न्यपिसृष्टिकालएवततोमियतेवस्तुतस्तुतदभिन्नान्येवेतिबोधयितुपठ्यते "एकोवशीसर्व-भूततरात्माएकरूपबहुधाय करोतितमात्मस्थयेनुपश्यतिधीरास्तेषांसुखशाश्वतनेतरेषा" मिति ॥ एतनविद्वन्मडनटीकोक्तमनूद्य ( तत्रयुक्तरूढयथास्ववाक्य तत्स्वारस्यस्यचभगा पत्ते मूलरूपत्वोपपादस्तदुक्तार्थकत्वेऽपिसभवाच्चे ) त्यादिवक्ष्यमाणप्रयोऽपिनिरस्तोवे-दितव्य ( स्क ६ अ० १४ श्लो० ५४ ) यआत्मसृज्य तरूमीइसइत्यादिव्यवहारात् । सदशार्थकप्रतिरूपशब्दलक्षणादिनाप्रतिबिंबार्थकत्वकल्पनावेक्षयायौगिकार्थस्यन्याय स्त्वात् । तदर्थकत्वेऽपिवाक्यार्थासगते भावार्थेरनगीकाराच ॥ यत्रयोगरूढ शब्दोरूढिमनादृत्यकवल्यौगिकार्थेप्रयुज्यतेतयथापकजादिशब्द कीटाद्यभिप्रायेणविशेष्य-भूतस्त्रैवरूढिभगादाप । यस्तुशब्दार्थांतरेचयागिक तत्रप्रयोगेकामचार यथामडपो-याल इत्यादिप्रयुज्यते । एवमकृतरूपरूपमित्यस्यणमुलत्वाश्रयणमप्यदुष्ट वाक्यान्त-राणितुस्वरसतोव्याख्यातानिमूलरूपताचसर्वोपादानत्वलक्षणैवश्रुतरभिमता, "एकरूप-बहुधाय करोती" त्युक्ते । नतुबिंबत्वस्वरूपा अनभिधानात् । ब्रह्मात्मप्रतिबिंबगतक 'पादेर्बिंबेऽसबधेनश्रीआदिभावटीकरणपूर्वकतच्छकापाकारिण "सूर्योयथासर्वलोकस्य-चक्षु" रित्यस्य । प्रतिबिंबस्यालोकत्वेनबिंबरूपत्वाभावाच्चदङ्गुत्वेपिबिंबैक्यानपायाच

ति "एकरूपबहुधे" त्यस्य । प्रतिबिम्बेविम्बस्थित्ययोगेन 'तमात्मस्थ' मित्यस्य तादृशज्ञान-फलस्यचबाधप्रसगाच्च ॥ तत्ससहिताकाण्डवाक्यणादिगत 'रूप रूप' मितिवाक्यमपितावकतु-रीयश्लोकखडनावसरेविवृतमाह । अथ (अ० २ पा० ३ सू० ५०) "आभासएवचेति" सूत्रविचार्यते–तत्रजडजीवपादेजीवस्य देहादिवज्जित्यत्वाभाव चिद्रूपत्वचिद्धर्मत्वे उत्क्रा-न्त्यादिमत्वाणुत्वविसर्पिगुणकत्वानि आनदाद्यभिव्यक्तौ ब्रह्माभेदव्यपदेशस्यानौपचारिकत्व, तस्यैवविहितप्रतिषिद्धकर्तृत्वमनुबुध्यादिरूपोपाधेरिति "नात्माश्रुते"रित्याद्यधिकरणपच-केनक्रमादुपपाद्य "परात्तु" त्यधिकरणेनभगवदधीनक्रियत्व समर्थ्य सांख्यनैयायिका-दिवत्तस्यनित्यत्वेविभुत्वेचनात्विकाभेदोदुर्घटइतितच्चिराकरणाय "अंशोनाने" त्यधिकरण-भगवानारब्धवान् ॥ तत्रसूत्रत्रयेण स्वांशत्वनिर्धार्यतेनप्रसक्तद्वैतदु खादे परस्मिन् सबधशकासूत्रद्वयेनव्युदस्यभगवदशस्यकथमनुज्ञापरिहारविषयत्वमित्याशकायां चित्ताग्नि-होत्रादिसबधात्तस्यतावितिसूत्रद्वयेनसाधयित्वाभगवदशस्यप्रथमतएवकथदु खपापादिप्रवा हेप्रवेशइत्याशकायामुच्यते–"आभासएवचे" ति । यथाऽनाचारिब्राह्मण सूत्रधारणा-दिसाम्येऽपिब्राह्मणाभासएवब्राह्मण्यदेवतायास्तत्रतिरोहितत्वात्तद्विरुद्धमद्यादिसबधाच्च । तथाजीवश्चेतनत्वसाम्येपि ब्रह्माभासएव, आनदैश्वर्यादितिरोधानात् तद्विरुद्धादध्यासलक्ष-णाद्देहसबधाच्च ॥ अत्रहिचकारेणदेहसबधादित्यनुवर्तते (अ० १ पा० ३ सू० ४) "प्राण भृच्चे" त्यादावतच्छब्दादित्यादिवत् । इदचनिबधे "सदशस्फूर्त्ताबाभासस्य" मित्यादिवद-द्भिराचार्यपादैरेतत्सूत्रव्याख्यानेतदेवचानुवदद्भि प्रकाशकारचरणैश्च ध्वनित । नचास-त्ततिसूत्रेणव्यवधानान्नानुवृत्तिरितिशक्य,तस्यानुज्ञापरिहारविषयकर्मान्यतिकरोपपादकत्वेन पूर्वसूत्रशेषत्वमासाक्षाज्जीवस्वरूपधर्मनिरूपकसूत्राणामर्थव्यवधानाभावात् । अन्यथापक्ष-वाचकमात्मपदमपिनानुवर्तेत, असत्ततिसूत्रेणप्रकाशादिवन्नैवमित्यादिसूत्रैश्चव्यवधानात् । अतआनदादितिरोभावाद्देहाध्यासाच्चाभासत्वमनुत्वरूपतथा ॥ ततएवचद्वैतप्रत्ययोदु खा दिप्रवाहश्च "देव क्षेत्रनेवमजोऽयमात्मा भूतेभूतेव्यवस्थित" इत्यादावपिदेहसबधादेव नानात्वप्रत्ययउच्यते ॥ विपर्यय प्रतितिरोभावस्यदेहसबधस्यचकारणत्व पराभिधानसूत्र (अ० ३ पा० २ सू० ६) "देहयोगाद्वासोऽपी" तिसूत्रेचस्पष्ट । यथाचब्राह्मण कर्मणाब्राह्मणाभासतामापन्नोपि प्रायश्चित्तेनब्राह्मण्यविरुद्धदुरितक्षयात्पुन सस्कारादिना ब्राह्मण्यदेवताया आविर्भावाच्चभूयस्तथैव ब्राह्मण सपद्यते । तथाजीवउक्तहेतोराभासता प्राप्तोऽपि शास्त्रीयसाधनैरध्यासक्षयादानदाद्याविर्भावाच्च पुनर्ब्रह्मभावमापद्यतइतिभाव ॥ श्रूयतेचेद "ब्रह्मवेदब्रह्मैवभवती" त्यादौ ॥ प्रतिबिम्बपक्षेतूपाधिनाशेतन्नाशश्रौव्यात्तस्य-ब्रह्मभावोदुर्घच तथाचानेकश्रुतिव्याकोप । अनेनसूत्रेणाभासत्वमनेकपुराणादिवचना न्यप्येवमाभासत्वबोधनपरतयाव्यवस्थापितानिवेदितव्यानि । किचस्वरूपतआभासत्वागी-कारे "नात्माश्रुते" रित्यादिपूर्वसूत्र समर्थितसर्वमपिविरुध्यते प्रतिबिम्बस्यालीकत्वेनानि त्यत्वचिद्रूपत्वयोरयोगात् बिंबस्याक्रियात्वेनोपाधर्जडत्वेनोभयोविभुत्वेनजीवस्यात्मनो-त्क्रान्त्यादेरणुत्वादेश्चासभवात् । सत्यालीकयोर्भेदनप्रतिबिंबेतद्गुणसारत्वस्य आनदाद्यभि-व्यक्तेश्चादिवकाभेदस्यचासगते कर्तृत्वस्याप्यसिद्धे "परात्तुतच्छ्रुते" रितिबिंबस्य सक्रियत्वा-

पत्ते., अनुपचारतोशत्वानिष्पत्तेश्च ॥ नचकानिचिदणुत्वादिसूत्राण्यन्यथानीयतइत्यदोष-शमय, तद्व्याख्यानस्यसविस्तरदूषितत्वात्, बहूनामनुग्रहस्यन्याय्यत्वात्। अनन्यथानीतवि-रोधतादवश्यव्याचयदिचसूत्रकारस्तथाभिप्रेयात्, प्रतिबिंबमेवचेत्येकमेवसूत्रमसंदिग्धशब्दघ-टितंवदेत् 'नात्माश्रुते'रित्यादीनिनैवसूत्रयेत्। नाणुतद्दिइत्याद्येववातदभिप्रेतहेतुक्तिपूर्वक-सूत्रयेत् ॥ किंचक्वायमाभासइतिसंदेहानपायान्मायाऽविद्यात करणादिप्वन्यतमतदाधारम-पिस्वयनिर्धारयेत् येनभवादृशानानाविकल्पानस्यु, सतिह्यधिष्ठानविपयेतन्मतप्रसिद्धाअने-केपक्षा. तेचावरणभंगसुवर्णसूत्रादिपुसगृहीतानिराकृताश्च। किंचाभासशब्दोनेत्रेऽगुल्यादि-सपर्केणप्रतीयमानबहुचंद्रादिपुप्रसिद्ध। क्वचित्प्रतिबिंबेपिदृष्ट.। त्वन्नाम्यादिपुचोभयविध-मप्याभासत्वतस्योच्यतइत्यनिर्णय। तथासूत्रार्थास्यताभिनिवेशोऽवच्छेदवादोच्छेदश्चसूत्रा-नारूढत्वात्। कथंचित्तस्यापिप्रामाणिकत्वसाधनेतुवादानापरस्परविरोधात् पराहतिजीवस्व-रूपानिर्धारश्च ॥ (अ० ३ पा० २ सू० १८) "अतएवचोपमासूर्यकादिव" दितिसूत्रतु (अ० २ पा० २ सू० ११) "नस्थानतोपिपरस्योभयलिंगसर्वत्रही" तिपरस्यब्रह्मण-सविशेपत्वनिर्विशेपत्वविचारप्रक्रमेऽस्ति। त्वन्मतेतु "दर्शनाच्चे" त्यतमेकादशसूत्रमेकमे-वाधिकरणअतस्तद्ब्रह्मणएवसूर्यकतौल्यमूते, नतुजीवस्यपूर्वापरसूत्रेपु, तदुल्लेखाभावात् ॥ वस्तुवस्तु "अतएवचोपमे" त्येकदेशिमतसिद्धातवदन् स्वयमेवानुपदसूत्रकारोनिरा करोति (अ० ३ पा० २ सू० १९) "अम्बुवद्ग्रहणात्तुनतथात्व" मिति। अत्र-विशेपस्त्वग्रेवक्ष्यते। इहपरेपाव्याख्याने वत्युपमापदयोरन्यतरवैयर्थ्यसूर्यकादिवदित्यु-पमेतियोजनेपिवैयर्थ्यानपाय इतिशब्दाध्याहारक्लेश श्रुतौवादशानुपूर्व्यभावात्स्वरू-पव्यवस्थापकेतिशब्दस्यासगतिश्चेत्यादिध्येय। अतोजीवप्रतिबिंबवादे नकाचिदपिश्रु-ति सूत्रवामानमस्ति ॥ अथ (अत्रकश्चित्) इत्यादिप्रत्यवस्थानोल्लेखस्त्वविरुद्धप्राय। इहद्वितीयहेतुभूतनिरवयवत्वतुस्वारभकावयवशून्यत्वविवक्षणीय। तेज सयोगेजलनिष्ठशी-त्वस्पर्शकमिकविरोधानदर्शनेन तन्मात्रा सावयवत्ववादेतुद्वितीयहेतावाकाशोदृष्टातीकार्य। निरवयवत्वपक्षेनिरवयगाण्यपिरूपादीनिप्रतिबिंबतइतिव्यभिचारवारणाय पचमहेतौइतर ग्रासमवेतत्वे इति गुणाक्रियाभेदेइति वा सत्यतदेय, सप्तमेऽपितद्वारणायतद्वय। चक्षुर्योग्यत्ववारूपशब्दार्थोविवक्षणीय। तथाचचक्षुरयोग्यत्वादित्येवनिष्कृष्टोहेतु। एव-चोपाधावयवारब्धत्वद्वितीयविशेपण। विवस्यप्रथमविशेपणे पूर्वोक्तसत्यतांशसामाना धिकरण्यविशेपण। तृतीयविशेपणचचक्षुर्योग्यत्वमितिज्ञेय। यत्तुप्रत्यवस्थाने (अंशवि शेपत्वप्रतिपादकवाक्यवदन्यथाव्याख्येयानी) ति,–तदसत्, युष्माकतत्रअंशइवाराइत्यु-पचारादस्यवक्ष्यमाणस्वेयथाह्ययमित्यादिवाक्यव्याख्यानेऽस्माकक्लेशलेशस्याप्यभावात्। तत्र "एकस्यनानात्वदृष्टातार्थ" इतिव्याख्यानस्य "भेदरूप क्रियतेबहुधादृश्यत" इत्यादि-श्रुत्यक्षरैरेनस्वरसत्व सिद्धं ॥ अथप्रकृतेस्त्रिगुणात्मकत्वसाधनायात्रमितिवाक्योदाहरण तुधाष्ट्यात्। इदवाक्य हेश्वेताश्वतरचतुर्थाध्याये तैत्तिरीयाणा नारायणोपनिषदिचकिंचि-त्पाठभेदेनदृश्यते। तत्र "लोहितशुक्लकृष्णा" मिति लोहितादिपदै रंत सत्वतमांसि यथाभिनेत्रानिरस्तु। तथाचसति साख्यमतस्यापिवैदिकत्वमापद्येत ॥ यत्तुवस्तियद-

लोहितादिपदैस्तेजोऽबन्नान्येवक्रमेणविवक्षितानि । अजाशब्देनचास्यादिस्थचंद्रविधुद्रूपं ज्योतिरेवेतिसमर्थितंभगवता (अ० १ पा० ४ सू० ९) "ज्योतिरुपक्रमात्तुतथाह्यधीयत-एके" इतिसूत्रे ॥ रोहितादिपदानां तत्तद्वर्णपरत्वंतुभैतरेयेतुविद्यायां "यथातुखलु-सोम्येमास्त्रिवोदेवतात्रिवृत्त्रिवृदेकैकाभवतितन्मेविजानीहि" इतिप्रतिज्ञाय "यदग्नेरो-हितरूपंतेजसस्तद्रूपयच्छुक्लं तदपांयत्कृष्णंतदन्नस्य" त्यादिनास्पष्टंदर्शितं । तत्रवाक्यं-शंकराचार्यैरपिलोहितादिपदानां गुणपरत्वंपूर्वपक्षीकृत्यतेजोबन्नपरतामेव सिद्धांतयद्भिः-शारीरकभाष्ये श्वेताश्वतरभाष्ये चतथैवव्याख्यायतइतितानतिक्रम्यतद्वाक्येत्रिगुणात्मक-त्वसाधकत्वस्योक्तिर्धार्थ्यादेव । सत्वरजइतिप्रथमस्कंधवाक्यस्यापविशेषेणगुणत्रयं तस्याः-सिद्ध्यतिनतुप्राधान्येनसत्वगुणकत्व, अथ (स्रष्ट्रया प्रकृतेरितिकथयतासृष्टिकालावच्छेदेन तथात्वंतस्याविवक्ष्यतइतिचेत्-न, (स्कं० १ अ० २ श्लो० २३) "सत्वंरजस्तम इति-प्रकृतेर्गुणास्तैर्युक्त पर पुरुषएक इहास्यधत्ते ॥ स्थित्यादयोहरिविरिंचिहरेतिसंज्ञा" इति-सत्वस्य स्थितिहेतुत्वकथनात् प्रत्युत्तरजउद्रेकात्सृष्टिकथनेन तस्यास्वच्छत्वेनतदाप्रति-बिंबासिद्ध्या सृष्टिकालेजीवानुद्भवप्रसंगाच्च । मायातिविश्रुतिस्तु पूर्वापक्षावादेवात्म-शक्तिमेवमायात्वेननिरूपयति, नतुत्रिगुणां, अन्यथासास्यमतस्यवैदिकत्वप्रसंगात् । शंकरा-चार्यैरपितथैवशारीरकभाष्यादौव्याख्यातं । वस्तुतस्तुविस्तरेणव्याख्यावामाह ॥ सत्वे-प्रतिबिंबग्रहानुकूलस्वच्छत्वतुत्वन्मतानुगातिरिक्तविदुपाव्यवहारस्याविषय ॥ गीतास्थ-मीश्वरवाक्यच सत्वस्यज्ञानजनकत्वमात्रंब्रूतेनतुस्वच्छता । नापितज्जनकत्वेनस्वच्छत्वेनच व्याप्तिरस्ति; यतोऽन्यथानुपपत्त्यातदनुमीयेत स्वसयोगादिसंनिकर्षद्वाराज्ञानजनकताया दार्वादिमलिनविषयेपितत्तज्ज्ञानकरणेच दर्शनेनव्यभिचारात् । अत 'तत्रसत्वंनिर्मलत्वा' दितीश्वरवाक्यमुदाहर । वस्तुतस्तुतत्रापिप्रकाशानुकूलनैर्मल्यमेवहेतुहेतुमद्भावनिर्देशाद्बो-ध्यते, नतुप्रतिबिंबौपयिक मानाभावात् । प्रकाशानुकूलनैर्मल्यवत्सुवन्हिप्रदीपादिषु प्रतीच्छायायाअदर्शनाच्च ॥ नापिनिर्मलपदप्रवृत्तिमात्रेण प्रतिच्छायानुकूलस्वच्छतैवावगंतुं-शक्या, सात्विकनिर्मलफलमित्यादौ सुखादिपुतत्पदप्रवृत्तिदर्शनेऽपिप्रतिबिंबाग्राहकत्वात् ॥ यच्चात्मावरकत्वंसत्वस्यस्वीक्रियतेतत्रात्मशब्देनजीवईश्वरोवा ? नान्त्य., "अनभ्रन्य" इत्यादिश्रुतौनाभनादित्वात्त्रिगुणत्वात्परमात्मेत्यादिगुणप्रकरणीयवचसाचविरोधेनतत्रसुख-सगज्ञानसगादीनामसत्त्यत्त्वनत्वात् ॥ आद्यश्चेदावरणासभव प्रतिबिंबत्वासिद्धिवौः रजतपात्रादे. स्वगतप्रतिबिंबानावरकत्वात् । तदावरणीयघटादेश्चवद्गतप्रतिबिंबत्वाभावात् । तथाअविद्याप्रतिबिंबभाक्मलिनत्वेपिकेनचिद्दोषेनशुद्धत्वात् सजलकज्जललिप्तपात्रादिव-दित्यनुमानेऽपिदृश्यत्वस्योपाधित्वेनहेतोर्व्याप्यत्वासिद्धि. ॥ प्रतिध्वने प्रतिबिंबत्वतुनिराक-रिष्यामः । तेनाकाशस्यप्रतिच्छायानाश्रयतयानोक्तोपाधे साध्याव्यापकत्व । वस्तुतस्तु-तत्रापिजलमेवप्रतिच्छायाश्रयोनतुकज्जलादीतितत्रापिनमलिनेप्रतिबिंब, तद्वदिहापिसत्वांश-मात्रस्यतदाश्रयत्वेतुगुणांतरेतद्रूपमंदेजीवनाशप्रसंग, आश्रयाभिभवेतदभिभवौचित्यात् ॥ गुणानामन्योन्याभिभावकत्वंतु 'रजस्तमश्चाभिभूये' त्यादिस्मृतिसिद्धं । किंचसत्वमात्रा-चिच्छन्नकस्य जीवस्य 'सत्वंसुखेसजयती' तिवाक्यात्सुखमेवस्यान्नतुकर्मदुःखादिक प्रमाद-

मोहादिकरा । तथा "गुणानेतानतीत्यत्रीन्, सगुणान्समतीत्यैतान्, ब्रह्मभूयायकल्पते, संभवन्निर्गुणोभवेत् । नैर्गुण्यस्यारमतेसगुणानुकथनेहरे । यद्विपश्यतिमुनयोगुणापायेसमाहिता" इत्यादीनिगुणत्रयापायोत्तरमपि जीवस्थितिबोधकानितादशस्वब्रह्मसपर्यादिबोधकानिच गीताभागवतादिवचासिपीड्येरन्, उपाधिनाशेप्रतिबिंबस्थित्ययोगात् ॥ एव "मायामेवातरतित" इत्यादिविरोधोप्यनुसधेय किचप्रहिल्लत्वयातस्याप्रतिच्छायोपयिकस्वच्छताभ्युपगमेसदशभूताना प्रतिबिंबार्हसर्ववस्तूना तत्रप्रतिबिंबोद्भवोदुर्निवार । नहिदर्पणादिकंमनुष्यप्रतिच्छायाश्रयोभवतीतिगवाश्वादीनिप्राण्यन्तराणिघटादयोजडाव्वात्रनप्रतिबिंबते । तथाचसतिसर्वस्सर्वदाप्रत्यक्षापत्ति, तस्याविर्भूतत्वात् अतिदवीयसिभागेप्रतिबिंबानगीकारेपिघटनिकटदेशेपुपरितस्तत्प्रतिबिंबोपलम्भेबाधकाभावात् ॥ नचतस्याभ्दश्यत्वमेवतत्रतत्तत्प्रतिबिंबोपलम्भेबाधकशक्य, त्वन्मतेआकाशस्याप्रत्यक्षत्वेपि तत्रप्रतिच्छायावयातत्वाभिमतस्यप्रतिध्वनेरिवमायागतघटादिप्रतिबिंबानाप्रत्यक्षस्योपपत्ते, शब्दवद्बिबभूतस्यघटादेःप्रत्यक्षयोग्यत्वेनतत्प्रतिबिंबेपुतद्योग्यताबश्यभावाच । नचाकाशस्यससाक्षिकप्रत्यक्षविषयत्वान्नतौल्यमितिशक्य, तथासति दर्पणप्रत्यक्षेवद्वत्प्रतिबिंबप्रत्यक्षनियमवदाकाशस्यतादशावसर एव प्रतिध्वनिप्रत्यक्षनियमभापद्येतेतितम खोमसमवरुद्ध गिरिगुहाकूपादिपुप्रतिशब्दानुभवानुपपत्ति ॥ कथंचित्ससाक्षिकप्रत्यक्षत्वमायायामपिशक्यवचन, एवतत्रसर्वप्रतिबिंबावश्यभावे सर्वेपा सर्वज्ञतास्यात् । यथाहुरावरणभगकारा —"अरूपस्यज्ञानस्यप्रतिबिंबोविद्यायुद्धो शुद्धत्वागीकारेणाभ्युपगतश्चेत्स्वरूपाणा सदशानाचाज्ञानाघटादीनामातराणाशिरादीनाचतत्रतत्रप्रतिबिंबोनिर्बाध । निर्बाधेचप्रतिबिंबेतत्समानाधिकरणानाम विद्यायाप्रतिबिंबितानाव्यापकाना जीवाना सर्वेपा सर्वैससर्गद्विगुणीकृत्य जातेसर्वतादात्म्यापन्नस्यब्रह्मणइवैतेपामपिसर्वैससृष्टत्वात्साक्षित्वाच वृत्तिविनैवस्वरूपचैतन्येनसर्गवभासकतया शक्यवचनत्वेनब्रह्मवत्सर्वेपा सर्वज्ञतास्यात् । नचात करणभेदेनप्रमातृभेदासदनापत्ति व्यापकत्वेनसर्वेपासर्वात करणससृष्टत्वयाप्रमातृभेदस्याशक्यवचनत्वात्ससर्गतौल्येएकस्यैवात करणवैशिष्ट्य, नापरस्येत्यत्रहेतोरभावात् अदृष्टादीनाहेतुताकल्पनस्य पूर्वप्रकरणएवनिरस्तत्वात्" इत्यादि ॥ विस्तरस्तुतत्रैवावधेय । एतावताप्रथमहेतो स्वरूपासिद्धि परिहृतावेदितव्या ॥ द्वितीयहेतुश्चस्वारभकावयवशून्यत्वविवक्ष्यते । स्वचपक्षसपक्षौ । अतोमायायास्त्रिगुणत्वेऽपिब्रह्मवदनादित्वागीकारेण दर्पणादिपुस्वावयवारब्धत्ववत्तस्यागुणारब्धतायावक्तुमशक्यत्वात् तादृशहेतुसत्त्वतस्यामस्त्येव तस्मान्नायमपिस्वरूपासिद्ध ॥ प्रतिध्वने प्रतिबिंबत्वाभावाच्चद्वितीयतृतीयचतुर्थानसव्यभिचारा । स्वारभकावयववैशिष्ट्यरूपविवक्षित, सावयवत्वतुमायाकाशयोर्नैवास्ति, वाय्वादिवत्तदारभकपरमाण्वाद्यभावात् ॥ घटमठाद्युपाध्यवच्छेदेनआकाशाशानामनुभवात्स्वीक्रियमाणतस्यसाशत्वतु प्रतिबिंबप्रदेअप्रयोजक, "एकाशेनस्थितोजगदि" त्यादिभिर्ब्रह्मणोऽपितथात्वेनतत्रतत्प्रसगात् । व्योमउत्पत्तिमत्वतु (अ० २ पा० ३ सू० १) "नवियदश्रुत" रित्यधिकरणसिद्धरवादिष्टमेव । तथाप्रकृतरपि (स्क० ११ अ० २४ श्लो० ३) "वाड्मनोगोचरातीतद्विधासमभवद्बृहत् । तयोरेकतरोह्यर्थ प्रकृति सोभयात्मिका ॥ ज्ञानत्वन्यतमोभाव पुरुषःसोभिधीयते"

